# ललितालालितः





सन्तु सहस्रं पाल्यास्तव मातरयं जनो विशेषेण। गुणवद्भ्यो हि सुतेभ्यो गाढप्रेमा जडे शिशौ जननी ॥



## परमहंसप्रिया - २५

(मूलं : भागवतम्)

**धर्म्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां**
**वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्।**
**श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः**
**सद्यो हृद्यवरुद्ध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥२॥**

(टीका : परमहंसप्रिया)

**ननु** इदं पुराणं नारम्भणीयं , गतार्थत्वात्।
तद्धि धर्म्मज्ञानार्थं वा , आत्मतत्त्वज्ञानार्थं वा , उपासनार्थं वा स्यात्।
तत्र -
न प्रथमः कल्पः , विष्णुपुराणादिना गतार्थत्वात्।
न द्वितीयः , चतुर्लक्षणीमीमांसया सिद्धेः।
न तृतीयः , नारदपञ्चरात्रादिना गतार्थत्वात्।
- इति।

**अत** आह - **धर्म्मः प्रोज्झितकैतव** - इति।

**अत्र श्रीमद्भागवते परमो धर्म्मः** । प्रतिपाद्यते - इति **शेषः** ।

श्रीमत्त्वञ्च नानाविधरसव्यञ्जकमधुरशब्दवत्त्वम् । एवञ्च प्रमेयसाम्येऽपि न आरम्भवैयर्थ्यम् । धर्म्मशास्त्रादीनाम् ईदृशश्रीमत्त्वाभावात् ।
प्रमेयवैलक्षण्यस्यातिस्फुटत्वात् च सुतराम् अवैयर्थ्यम् । - इति भावः ।

**श्रीमति भागवते** - इतिवक्तव्ये श्रीमद्विशेषणस्य नित्ययोगख्यापनाय समासः कृतः । समस्यमानविशेषणविनिर्म्मोकेणाव्यवहारात् ।
**'वषट्कर्त्तुः प्रथमभक्ष्यः चमस'** - इत्यत्र समासबलेनैव प्रथमत्वविशिष्टभक्ष्यान्तरविधानाभ्युपगमात् ।
वृत्तिश्च वाक्यं समासश्रुतिश्च ।
तथा च - भागवतस्वरूपप्रतीतिसमय एव श्रीमत्त्वप्रतीतेः उद्देश्यत्वात् - न अविमृष्टविधेयतांशतादोषः ।

अत्र प्रतिपाद्यानां श्रवणकीर्त्तनादिलक्षणानां धर्म्माणां बहुत्वेऽपि , भगवत्स्वरूपप्राप्तिलक्षणफलैक्यात् एकत्वम् ।
तथा च , एकफलको धर्म्मराशिः अत्र प्रतिपाद्यते ।
कर्म्मकाण्डात्मकधर्म्मशास्त्रेषु च विभिन्नफलानां धर्म्माणां प्रतिपादनात् , न पौनरुक्त्यम् ।
एतदभिव्यनक्ति - **परम** - इति ।
सर्व्वतः श्रेष्ठ - इत्यर्थः ।
तथा च **वक्ष्यति** –

स वै पुंसां परो धर्म्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यप्रतिहता ययाऽत्मा सुप्रसीदति ।

- इति ।

**एतेन** - मन्वादिधर्म्मशास्त्रैः अगतार्थत्वम् - **उक्तम्** ।
तत्र -

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यम् आत्मनिवेदनम् ॥

- इत्यादिभागवतधर्म्माप्रतिपादनात् ।

**ननु** तथापि महाभारतेन गतार्थत्वम् ।
तथा च तत्रैव -

धर्म्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥

- इति भागवताश्च प्रतिपादिताः ।

**अत** आह - **प्रोज्झितकैतव** - इति ।
**कैतवं** = कपटं = युधिष्ठिरादिचरितव्याजः ।
तत् भागवततात्पर्य्यकत्वेऽपि महाभारतेऽस्ति ।
न च अत्र कश्चिद् व्याजोऽस्ति - इति , प्राधान्येन भागवतधर्म्मवर्णनम् अस्यार्थः ।
तथा च **उपसंहरिष्यति** -

कलिमलसंहतिकालनोऽखिलशो
हरिरितरत्र न गीयते ह्यभीक्ष्णम् ।
इह तु पुनर्भगवानशेषमूर्त्तिः
परिपठितोऽनुपदं कथाप्रसङ्गैः ॥

- इति ।

एतच्च सर्व्वं **व्यासनारदसंवादे** स्फुटीभविष्यति ।

**प्र**-शब्देन विष्णुपुराणादिभिः अगतार्थत्वं सूचयति ।

तत्र हि सर्व्वात्मना न कैतवं प्रोज्झितं ;

वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्थाः नान्यस्तत्तोषकारणम् ॥

- इत्यादिना भागवतधर्म्माणाम् अपि वर्णाश्रमधर्म्मसापेक्षत्वकथनात् ।

अत्र तु -

त्यक्त्वा स्वधर्म्मं चरणाम्बुजं हरेः
भजन्नपक्वोऽथ पतेत् ततो यदि ।
यत्र क्व वाऽभद्रमभूदमुष्य
किं को वाऽर्थ आप्तो भजतां स्वधर्म्मतः ॥

- इत्यादिप्रबन्धेन भागवतधर्म्माणाम् अन्यनिरपेक्षत्वप्रतिपादनात् , **प्रकर्षेण कैतवम् उज्झितम्** - इति ।

एतच्च -

केचित् केवलया भक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥

- इत्यादौ **स्फुटीभविष्यति** ॥

"**कैतवम्** अत्र फलाभिसन्धिः । **प्र**-शब्देन मोक्षाभिसन्धिरपि निरस्त ।" - इति **अन्ये** ॥

तैर्महाभारतादिना गतार्थत्वं परिहर्त्तव्यम् ।

अत्र च **धर्म्मः प्रोज्झितकैतव** - इतिपदाभ्याम् एव अपेक्षितार्थलाभे **परम** -पदं स्फुटार्थम् ।

**अत्रपरम्** - इत्येकं **वा** पदम् ।

यस्मिन् धर्म्मे **अत्रपा** = निर्लज्जा एव रमन्ते , स तथा ।

तथा च **वक्ष्यति** -

शृण्वन् सुभद्राणि रथाङ्गपाणेः
जन्मानि कर्म्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि

गायन्विलज्जो विचरेदसङ्गः ॥

विलज्ज उद्गायति नृत्यते च
मद्भक्तियुक्तो भुवनं पुनाति ।

- इत्यादि ।

**ननु** एवं सति भिन्नकर्म्मत्वापातः वर्णाश्रमाचारधर्म्मानपेक्षत्वात् । - इति ।

**अत** आह - **निर्म्मत्सराणां सताम्** - इति ।
**सन्तः** = शुद्धान्तःकरणाः = रागद्वेषादिदोषशून्याः = साधवः । तेषाम् एव अयं वर्णाश्रमधर्म्मनिरपेक्षो भागवतो धर्म्म - इत्यर्थः ।
तथा च **वक्ष्यति** -

तावत् कर्म्माणि कुर्व्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥

- इत्यादि ।
तथा च , इह जन्मनि जन्मान्तरेऽनुष्ठितैः सुकृतैः शुद्धसत्त्वानां कुतो भिन्नकर्म्मत्वापातः , तत्सम्पादकरागद्वेषराहित्यात् ।
तथा च , **अग्रे** साधुलक्षणं तन्निष्ठां च **वदिष्यति** -

स वै मनः कृष्णपदारविन्दयोः
वचांसि वैकुण्ठगुणानुवर्णने ।

- इत्यादि ।

समत्वेनैव मात्सर्य्याभावसिद्धौ **निर्म्मत्सराणाम्** - इत्यनेन सर्व्वभूतानुकम्पाया भागवतधर्म्मेष्वतिशयत्वं दर्शयति ।
**मत्सरः** = असूया = द्वेषस्य पूर्व्वावस्था सर्व्वदोषेषु अतिपापिष्ठतरा ।

अभेदभावस्य भक्तिवत् पृथगपेक्षणीयतां दर्शयिष्यति -

सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नीशेऽखिलात्मनि ।
तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥

- इति ।
अत एवायं ग्रन्थः **परमहंससंहिता** - इति समाख्यायते , सर्व्वभूताभयदानं विना परमहंसत्वाभावात् ।

एवं स्वरूपतः , प्रमेयतः , अधिकारितः च वैलक्षण्येन कर्म्मकाण्डेन अगतार्थत्वम् उक्त्वा ; ज्ञानकाण्डेनापि तदाह - **वेद्यम्** - इत्यादिना ।

यत् **वास्तवम्** = अबाध्यं **वस्तु** = प्रथमश्लोके दर्शितं , तद् **अत्र** = ग्रन्थे **वेद्यं** = वेदनार्हम् ।
सर्व्वेषाम् - इति **शेषः** ।

**शिवदम्** - इत्यनेन परमानन्दरूपतया तस्य पुरुषार्थत्वं कथितम् ।

शिवं ददाति सर्व्वेभ्य - इति , **शिवदम्** ।

तथा च **श्रुतिः** -

को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात् ।

एष ह्येवानन्दयति ।

- इति आनन्दरूपस्यैव सतः सर्व्वानन्दहेतुत्वं दर्शयति ।

**तापत्रयं** च -

आध्यात्मिकं = ज्वरशोकादि ,

आधिदैविकं = ग्रहावेशादि ,

आधिभौतिकं = व्याघ्रसर्पादि

- इति ।

तस्य च **उन्मूलनं** = निःशेषविनाशनम् ।

**तापत्रयोन्मूलनम्** - इत्यनेन सर्व्वानर्थनिवृत्तिरूपतया सर्व्वानर्थहेतोः अनाद्यविद्याया उच्छेदकत्वं सूचितम् । तथा च **श्रुतिः** –

तमेव विदित्वातिमृत्युमेति ,

निचाय्य तं मृत्युमुखात् प्रमुच्यते ,

- इत्याद्या ततः सर्व्वानर्थनिवृत्तिं दर्शयति ।

एवञ्च , यत् परमपुरुषार्थभूतं शुद्धं ब्रह्म वासुदेवाख्यं चतुर्लक्षणीमीमांसया विचार्य्य मुमुक्षुभिः त्रैवर्णिकैः परमहंसपरिव्राजकैः एव कथञ्चित् वेदनीयं , तत् अत्र स्त्रीशूद्रादिभिः अपि वेदितुं शक्यम् - इति महान् अतिशयः ।
स्त्रीशूद्रादीनां चतुर्लक्षणीमीमांसाश्रवणेऽनधिकारस्य तत्रैव व्युत्पादितत्वात् । मन्दमतीनां च त्रैवर्णिकानां तादृशदुरूहतर्क्केषु अप्रवेशात् ।
इह तु तत् तादृशरसव्यञ्जकैः एव शब्दैः कोमलोक्त्या भूयोभूयः प्रतिपादनात् मन्दमध्योत्तमानां सर्व्वेषां ब्रह्मवेदनं युक्तम् ।
**- इति** भावः ।

**ननु** एवं सति अभिनवकविकाव्यस्यापि ब्रह्मप्रतिपादकस्य स्त्रीशूद्रादिश्रवणयोग्यत्वेन एतत्तुल्यता स्यात् - इति आशङ्क्य ;
आह - **महामुनिकृते** - इति ।

**महान्** = भगवदवतारत्वात् , भगवान् बादरायणः ।
स एव **मुनिः** , सततं मननशीलत्वात् ।
तेनापि नारदोपदेशम् आसाद्य रचितम् एतत् ।
तथा च **उक्तम्** –

अष्टादशपुराणानां कर्त्ता सत्यवतीसुतः ।
कृष्णद्वैपायनं व्यासं विद्धि नारायणं स्वयम् ॥

- इति

इतिहासपुराणञ्च पञ्चमो वेद उच्यते ।

- इति च ।

तथा च , व्यासकर्तृत्वसाम्येऽपि वेदसामाख्यानात् चतुर्लक्षणीमीमांसातोऽपि उत्कृष्टम् एतत् । किमुत अभिनवकावव्यात् । - इत्यर्थः ।

**महामुनिकृते** - इत्यनेन पाठमात्रादपि महत् पुण्यं , प्रामाण्यञ्च अव्याहतम् - इति सूचितम् ।

एवं ज्ञानकाण्डेन अगतार्थत्वम् उक्त्वा ; उपासनाकाण्डेनापि तत् आह - **किं वा परैः** - इत्यादिना ।

**परैः** = एतद्भिन्नैः = नारदपञ्चरात्रादिभिः ग्रन्थैः ।

**किं वा** - इति कटाक्षे । न किञ्चिद् अपि प्रयोजनम् - इत्यर्थः ।

तथा च , तैः निष्प्रयोजनैः सप्रयोजनस्य अस्य कुतो वैयर्थ्यम् - इति भावः ।

**ननु** भगवदुपासनं तेषां प्रयोजनम् इति , कुतो निष्प्रयोजनत्वम् - इति ।

अत आह - **ईश्वर** - इत्यादि ।
**ईश्वरः** = परमात्मा = वासुदेवाख्यः प्रथमश्लोकोक्तः **एतद्ग्रन्थश्रवणेच्छावद्भिरपि हृदि अवरुद्ध्यते** = प्रेमरसनया बद्ध्यते ; किं पुनः श्रवणपरैः ।
तदपि न विलम्बेन ।
किन्तु ।
**सद्यः** , **तत्क्षणात्** - इति पदद्वयोपादानम् अतिशैघ्र्यसूचनाय ।

**ईश्वरः** = स्वतन्त्रः ।
तस्य **अवरोधनं** = स्वाधीनतया अवस्थापनम् ।
तदपि न विस्तृते देशे ।
किन्तु ।
**स्वहृदि** अतिसङ्कुचिते स्थाने ।
तदपि **श्रवणेच्छामात्रेणैव** ।
- इति कियान् अतिशयो वक्तुं शक्यः ।

**तत् किं** पञ्चरात्रादिदेवताकाण्डं सर्व्वथा अनपेक्षितम् एव । तथा च , तदारम्भो व्यर्थः । - इति ।

**अत** आह - **कृतिभिः** - इति ।

**कृतिनः** = कुशलाः = रसभावनाचतुराः ।

तथा च , नीरसानाम् अकृतीनां तद् उपादेयम् - इति , न आरम्भवैयर्थ्यम् - इति भावः ।

अत्र **शुश्रूषुभिः** - इति कृद्योगे **'न लोकाव्ययनिष्ठाखलर्थतृणाम्'** - इत्यादिना षष्ठीप्रतिषेधात् , कर्म्मणि द्वितीया प्राप्ता चेत् ; **'इमं शुश्रूषुभिः'** इतिवक्तव्येऽपि , **'अत्र'** - इतिसप्तमी यथाकथञ्चित् विषयतामात्रेणैव इदं फलम् - इति सूचयति ।
द्वितीयाप्रयोगे तु **'कर्त्तुरीप्सिततमं कर्म्म'** - इति पाणिनीयस्मरणात् , ईप्सिततमत्वे सत्येव एतत् फलम् - इतिभ्रमः स्यात् ।

एवञ्च , **धर्म्मः प्रोज्झितकैतव** - इत्यत्र क्रियापदानभिधानं सर्व्वप्रकारेण अत्रैव धर्म्मस्य पर्य्यवसानं सूचयितुम् ।
एवं , **वास्तवम्** - इत्यत्र कर्त्तृपदानभिधानम् अविशेषेणैव सर्व्वाधिकारसूचनार्थम् ।
- इति न्यूनपदता न दोषः ।

एवञ्च , अस्मिन् ग्रन्थे भगवान् , भगवद्भक्तिः , तत्साधनीभूतो भागवतधर्म्मः , तदनुष्ठातारश्च एवं भागवताः प्रतिपाद्यन्ते - इति ध्वनितम् ।
तथा च , सर्व्वशास्त्रापेक्षया श्रेष्ठत्वात् , इदम् एव सर्व्वदा श्रोतव्यम् - इति भावः ॥२॥

Enter your comment...

Comment as: ललितालालितः श्रीमा

Sign out

Publish Preview

Notify me





